# चम्पूरामायणे

# बालकाण्डम्

१३ – २६.०२.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# सङ्क्षेपः

- सोऽयं कदाचित् – रावणविहारसमये भीतः सूर्यः आतपं संहृत्य तस्मात् निलीयते
- एष मृगाङ्कोऽपि – रावणस्य स्नानकाले चन्द्रः जलोत्पादनेन क्षणमात्रं वा तस्य प्रसादं प्राप्तुं प्रयतते
- तेन पुलस्त्यनन्दनेन – रावणस्य उद्यानवृक्षाणां पुष्पाणां पतनं मा भूदिति भिया मरुतः चलितुमपि असमर्थाः

vyoma
Samskritam - Value Education - Technology

# एतेऽपि पावका रूढिशङ्कावहां हुतवहाख्यां वहन्तस्तद्गृहे गार्हपत्यपुरोगाः पौरोगवधुरं दधते ।

- अग्नेरवस्थां वर्णयति ।
- एते, अपि, पावकाः, रूढि-शङ्का-आवहाम्, हुत-वह-आख्याम्, वहन्तः, तद्-गृहे, गार्हपत्य-पुरोगाः, पौरोगव-धुरम्, दधते ।

# एतेऽपि पावका रूढिशङ्कावहां हुतवहाख्यां वहन्तस्तद्गृहे
# गार्हपत्यपुरोगाः पौरोगवधुरं दधते ।

- एते अपि = इमे अपि
- पावकाः = अग्नयः
- रूढिशङ्कावहाम् = यौगिकार्थं विना यादृच्छिकी संज्ञा इति भावनाम् उत्पादयन्तीम्
- हुतवहाख्याम् = "हुतवहः" इति अभिधानम्

एतेऽपि पावका रूढिशङ्कावहां हुतवहाख्यां वहन्तस्तद्गृहे
गार्हपत्यपुरोगाः पौरोगवधुरं दधते ।

- वहन्तः = दधतः
- हुतम् = हविः वहति = प्रापयति इति यौगिकः "हुतवह"शब्दः । किन्तु रावणस्य शासने यज्ञानां विध्वंसितत्वात् हविषामभावेन "हुतवह"शब्दस्य यौगिकार्थः न युज्यते इत्यर्थः ।
- तद्गृहे = रावणस्य निवासे

# एतेऽपि पावका रूढिशङ्कावहां हुतवहाख्यां वहन्तस्तद्गृहे
# गार्हपत्यपुरोगाः पौरोगवधुरं दधते ।

- गार्हपत्यपुरोगाः = गार्हपत्यः, आहवनीयः, दक्षिणाग्निः इत्यादयः सर्वेऽपि अग्निविशेषाः
- पौरोगवधुरम् – पौरोगवस्य = पाकशालाध्यक्षस्य, धुरम् = भारम्/स्थानम्
- दधते = धरन्ति

एतेऽपि पावका रूढिशङ्कावहां हुतवहाख्यां वहन्तस्तद्गृहे
गार्हपत्यपुरोगाः पौरोगवधुरं दधते ।

- तात्पर्यम् – गार्हपत्यादयः अग्नयः यज्ञादिषु कर्मसु उपयुक्ताः हविषः प्रापकत्वेन “हुतवहाः” इत्येव प्रसिद्धाः । किन्तु रावणेन सर्वेषां यज्ञानां विध्वंसितत्वात् अधुना एते अग्नयः पाककार्यार्थमेव उपयुज्यन्ते, न तु यागादिषु ।

एतेऽपि पावका रूढिशङ्कावहां हुतवहाख्यां वहन्तस्तद्गृहे
गार्हपत्यपुरोगाः पौरोगवधुरं दधते ।

- पावकाः – “कृशानुः पावकोऽनलः” (अमरः) । पुनाति इति पावकः । “पूञ् शोधने” + ण्वुल् ।
- रूढिशङ्कावहाम् – रूढेः शङ्का रूढिशङ्का, रूढिशङ्काम् आवहति । रूढिः अवयवार्थाभावेन समुदायप्रसिद्धिः – रथन्तरं साम, अश्वकर्णः ओषधिविशेषः ।

एतेऽपि पावका रूढिशङ्कावहां हुतवहाख्यां वहन्तस्तद्गृहे
गार्हपत्यपुरोगाः पौरोगवधुरं दधते ।

- हुतवहाख्याम् – हुतवहस्य आख्या, ताम् । "हिरण्यरेता हुतभुग् दहनो हव्यवाहनः" (अमरः)
- वहन्तः – "वह प्रापणे" + शतृ । तकारान्तः, पुं, १.३
- गार्हपत्यपुरोगाः – गार्हपत्यः पुरोगः येषाः ते । पुरः = अग्रे गच्छति इति । पुरस् – गम् + ड (कृत्) । "पुरोग-अग्रेसर-प्रष्ठ-अग्रतःसर-पुरःसराः" (अमरः) । "दक्षिणाग्निः गार्हपत्य-आहवनीयौ त्रयोऽग्नयः"

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# एतेऽपि पावका रूढिशङ्कावहां हुतवहाख्यां वहन्तस्तद्गृहे गार्हपत्यपुरोगाः पौरोगवधुरं दधते ।

- पौरोगवधुरम् – पौरोगवस्य धूः, ताम् । रेफान्तः, स्त्री, २.१ । "समानौ रसवत्यां तु पाकस्थान-महानसे । पौरोगवः तदध्यक्षः" (अमरः)
- दधते – "डु धाञ् धारण-पोषणयोः", आत्मनेपदे लट्, प्रथम.३ ।

किं बहुना । स एष मानुषादवमाननमागमिष्यतीत्यमन्वान-
स्तदितरैरवध्यत्वं चतुराननवराल्लब्ध्वा समुद्धतः सम्प्रति
सम्प्रहारसमाक्रान्तदिगन्तदन्तावलदन्तकुन्तव्रणकिणस्थपुटित-
वक्षःस्थलः स्थलकमलिनीं वनवारण इव रावणस्त्रिलोकीमभिभवन्
भवदीयानित्यस्मान्न जातु किञ्चिदपि जानातीति ।

- देवानां निवेदनस्य अन्तिमो भागः

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam - Value Education - Technology

# किं बहुना । स एष ....

- किम्, बहुना । सः, एषः, मानुषाद्, अवमाननम्, आगमिष्यति, इति, अ-मन्वानः, तद्-इतरैः, अ-वध्यत्वम्, चतुरानन-वरात्, लब्ध्वा, समुद्धतः, सम्प्रति, सम्प्रहार-समाक्रान्त-दिगन्त-दन्तावल-दन्त-कुन्त-व्रण-किण-स्थपुटित-वक्षः-स्थलः, स्थल-कमलिनीम्, वन-वारणः, इव, रावणः, त्रि-लोकीम्, अभिभवन्, भवदीयान्, इति, अस्मान्, न, जातु, किञ्चित्, अपि, जानाति, इति

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# किं बहुना । स एष मानुषादवमाननमागमिष्यति

- किं बहुना = बहुभिः कालयापनवाक्यैः अलम्
- स एषः = पूर्ववर्णितः रावणः
- मानुषात् = मर्त्यात्
- अवमाननम् = पराभवः
- आगमिष्यति = समापतेत्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# इत्यमन्वानस्तदितरैरवध्यत्वं चतुराननवराल्लब्ध्वा

- इति अमन्वानः = न गणयन्
- तदितरैः = मनुष्यभिन्नैः
- अवध्यत्वम् = अव्यापाद्यत्वम्
- चतुराननवरात् = चतुर्मुखस्य ब्रह्मणः अनुग्रहात्
- लब्ध्वा = प्राप्य

# समुद्धतः सम्प्रति सम्प्रहारसमाक्रान्तदिगन्तदन्तावल-दन्तकुन्तव्रणकिणस्थपुटितवक्षःस्थलः

- समुद्धतः = दर्पोद्रिक्तः
- सम्प्रति = अधुना
- सम्प्रहार... – सम्प्रहारः = युद्धम्, तस्मिन् समाक्रान्ताः = समवरुद्धाः, ये दिगन्तदन्तावलाः = ऐरावतादयो दिग्गजाः, तेषां दन्ताः = रदनाः, एव कुन्ताः = शूलाः (आयुधविशेषाः), तैः यानि व्रणानि = क्षतानि, तेषां ये किणाः = शुष्कग्रन्थयः, तैः स्थपुटितम् = निम्नोन्नतम्, वक्षःस्थलम् = उरः यस्य सः

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

# स्थलकमलिनीं वनवारण इव रावणस्त्रिलोकीमभिभवन्

- स्थलकमलिनीम् - स्थले = निर्जलभूमौ, कमलिनीम् = पद्मिनीम्
- वनवारणः इव = वनगजः इव
- रावणः = पौलस्त्यः
- त्रिलोकीम् = जगत्त्रयीम्
- अभिभवन् = आक्रामन्

# भवदीयानित्यस्मान्न जातु किञ्चिदपि जानातीति ।

- भवदीयान् = तावकीनान् । निग्रहानुग्रहसमर्थस्य भवतः आश्रितान्
- इति अस्मान्
- जातु = कदाचित्
- किञ्चिदपि = ईषदपि
- न जानाति = न वेत्ति
- इति (सुमनसां संसत् पुंसे परस्मै विज्ञापयामास)

# किं बहुना । स एष ....

- तात्पर्यम् – रावणः अत्यन्तं पराक्रमी – युद्धे दिग्गजानां दन्तकृतानां व्रणानां किणैः तस्य वक्षःस्थलं निम्नोन्नतमस्ति (दिग्गजैः प्रहृतस्यापि व्रणमात्रं तस्य उत्पन्नम्, न तु महती कापि हानिः इति ध्वनिः) । तादृशः सः मनुष्यैः पराभवः कदाचिदपि भवितुं नार्हतीति तद्भिन्नैः सर्वैरपि अवध्यत्वं चतुर्मुखब्रह्मणः प्रसादात् प्राप्तवान् । तेन च वरेण दर्पोद्रिक्तः जगत्त्रयीमपि बाधते । भवतः महिमानं अजानन् सः भवदीयान् अस्मान् बहु पीडयति । [सेवकानाम् अपमाननं स्वामिन एव तिरस्कारः । अतः भवता सः शासनीयः] ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam · Value Education · Technology

# किं बहुना । स एष ....

- मानुषात् – "मनुष्या मानुषा मर्त्या मनुजा मानवा नराः" (अमरः)
- अमन्वानः – न मन्वानः । "मनु अवबोधने" + शानच् ।
- अवध्यत्वम् – वधम् अर्हति – वध+यत् (तद्धितः) । न वध्यः । अवध्यस्य भावः ।
- चतुराननवरात् – चत्वारि आननानि यस्य सः । चतुराननस्य वरः, तस्मात्

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# किं बहुना । स एष ....

- दन्तावलः – “दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः” (अमरः)
- दन्तः – “रदना रशना दन्ताः” (अमरः)
- वनवारणः – “मतङ्गजो गजो नागः कुञ्जरो वारणः करी” (अमरः)
- त्रिलोकीम् – त्रयाणां लोकानां समाहारः । समाहारद्विगुः । “अदन्तोत्तरपदो द्विगुः स्त्रियामिष्टः” (वा) । त्रिलोक + ङीप् (स्त्री) ।

# किं बहुना । स एष ....

- अभिभवन् – अभि-भू + शतृ ।
- भवदीयान् – भवतः इमे – भवत् + छ (तद्धितः) । अकारान्तः, पुं, २.३
- जानाति – "ज्ञा अवबोधने" – लट्, १.१

# सङ्क्षेपः

- एतेऽपि पावकाः – यज्ञक्रियाणां विध्वंसितत्वात् पाकमात्रार्थं प्रयुज्यमानाः अग्नयः
- स एष मानुषाद् – युद्धे रावणस्य पराक्रमः, मनुष्येतरैः अवध्यत्वरूपः वरः, लोकत्रयस्य पीडा, भगवतः तिरस्कारः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in









- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in